देशोऽत्र मेघो वनराजिसाम्यं
हिमाचलो धान्यचयेन साम्यम् ।
साम्यं तथाब्धिश्च जलाशयेन
प्राप्नोति नाकोऽप्यथ कोसलेन ॥ 8

दारिद्र्यशून्येऽत्र न दानवार्ता
युद्धातिदूरे किमु वीर्यवाचा ।
असत्यशून्ये किमु सत्यवाचा
बहुश्रुताढ्ये न धियः प्रभावः ॥ 9

रम्या जनाः स्वीयगुणेन नित्यं
नीतिः स्थिराभूदनृताप्रसक्त्या ।
प्रेम्णा वधूनां स्थिर एव धर्मः
शीलेन तासामिह काऽऽकृतिः ॥ 10

अन्विष्य पद्भ्यामिह कोसलस्य
द्रष्टुं हि वेलां भुवि के समर्थाः ।
कुल्याङ्घ्रपादैः सायूः समन्तात्
अद्यापि गत्वा न हि वेत्ति वेलाम् ॥ 11

घोरस्य वाताहतसागरस्य
प्रवेशमात्रेऽपि न वै विनाश्यः ।
यः कोसलोऽसौ कथितः पुरैव
पुरीमयोध्यामथ वर्णयामः ॥ 12

## 3

### अयोध्यानगरपटलः

(நகரப்படலம்)

रम्यार्थगम्भीरपदप्रयोगवत्-
मुनिप्रवीरैः कविभिः स्तुतेयम् ।
यद्धाम वाञ्छन्ति जनास्तपोभिः
तत्र स्थितैश्चापि पुरी वरेण्या ॥ 1

ब्रह्मा शिवो विष्णुरिमे ह्ययोध्या-
समां पुरीमत्र न ददृशुस्तः ।
तद्द्रष्टुकामौ किल सूर्यचन्द्रौ
निमेषशून्यौ चरतो ध्रुवं तत् ॥ 2

पुण्येन मुक्तिर्भवतीति वेदाः
रामेण पुण्यं ववृधे पृथिव्याम् ।
पुरीमिमां प्राप्य गुणी स रामः
ररक्ष चेत् भोग्यमितः किमन्यत् ॥ 3

यशःप्रधाना रविवंशभूपाः
लोकान् दिशो व्याप्य निजाज्ञयैव ।
रक्षन्ति चेत् आवरणो नगर्याः
प्राकार आसीन्ननु मण्डनार्थः ॥ 4

अगाधदुर्गं जलधिभ्रमेण
प्रविश्य मेघाः सलिलं गृहीत्वा ।
प्राकारमत्रोन्नतशैलबुद्ध्या
आरुह्य वर्षन्ति च तत्र धाराः ॥ 5

प्राकारबाह्ये जलदुर्गजात-
पद्मानि तद्देशवराङ्गनानाम् ।
मुखैः पुरा प्राप्तपराभवं स्वं
स्मृत्वेव योद्धुं किमु सन्नद्धानि ॥ 6

चन्द्रादपि श्वेततराणि नाना-
सद्मानि चण्डैः पवनाभिघातैः ।
उपर्युपर्युत्थितदुग्धसिन्धु-
तरङ्गवद् व्योम्नि विभान्ति पुर्याम् ॥ 7

शैलस्थनानाकदलीसमानैः
पताक संघैर्निबिडेऽम्बरेऽस्मिन् ।
चरन्सदाविन्दुरपि ध्वजानां
सङ्घट्टनात् क्षीणतनुर्बभूव ॥ 8

स्वर्णैर्वरिष्ठै रचिता पुरी स्वां
छायां च विशुद्धविदीपतुल्याम् ।
प्रसार्य सम्यङ् ननु देवलोक
तत्स्वर्णलोकं विदधे यथार्थम् ॥ 9

कान्त्या दिवारात्रगतं वितर्कं
　　उत्पादयन्त्यां किल तत्रनगर्याम् ।
पुण्याङ्गना देहदिदृक्षयेव
　　निमेषशून्याः प्रतिमाः किमत्र ॥　　10

पथ्या च संयोगवियोगकृत्यैः
　　गानेन तस्य श्रवणेन पुर्याम् ।
जलावगाहैः कुसुमस्य धृत्या
　　कालः प्रयात्यत्र पुराङ्गनानाम् ॥　　11

तुरङ्गमातङ्गरथान् नयन्तः
　　केचिन्नरास्तत्र नयन्ति कालम् ।
अकिञ्चनानां बहुयाचकानां
　　दत्त्वा यथेष्टं मुदिताश्च केचित् ॥　　12

गजान् मिथो योधवशान् विधाय
　　धनुः प्रयोगाभ्यसनेन केचित् ।
धीरा प्रयान्तस्तुरगैर्नयन्ति
　　कालं, धनुःशास्त्रविचारणेन ॥　　13

चलत्पटे व्योमगता ध्वजास्तु
　　किं व्योमगङ्गासलिलं लिहन्ति ।
श्वेता घना व्योमगताः समुद्र-
　　माविश्य नीरं च यथा पिबन्ति ॥　　14

मेघाब्धिघोषादपि घोररूपैः
भेरीनिनादैः सहिते पुरेऽस्मिन् ।
चोरा न वै तेन न वित्तरक्षा
न याचकास्तेन न दानवार्ता ॥ 15

यतोऽत्र विद्यासहिताः समस्ताः
विद्वानविद्वानिति नास्ति भेदः ।
समस्तसौभाग्ययुतेषु तेषु
धनी दरिद्रस्त्विति नास्ति भेदः ॥ 16

विवादरूपबीजं बहुधा प्ररूढं
योगाख्यपत्रैः प्रियकुड्मलैश्च ।
धर्माख्यपुष्पैः सहितं नगर्यां
उत्पादयद् भोगफलं ततोऽभूत् ॥ 17

## 4

## दशरथशासनपटलः

(அரசியற்படலம்)

पुरीमयोध्यामव चक्रवर्ती
यः सप्तलोकानपि पातुमीशः ।
मुदाश्रयो भावुकराघवाब्द-
मनून् पाति स्म स धर्ममूर्तिः ॥ 1

द्विरतान् समेषां निजदानवारि-
सिक्तान् पृथिव्यामकरोत् सदा सः ।
अन्यैरसाध्यान् श्रुतिमार्गगामि-
भूपैकसाध्यान् विदधे च यज्ञान् ॥ 2

स्वप्राणतुल्यान् सकलांश्च जन्तून्
मत्वाऽस्य लोकस्य च पालनेन ।
चराचरात्माऽखिलजीवराशि-
निवासदेहेन समोऽस्ति भूपः ॥ 3

युद्धाप्रसक्त्या सह शत्रुवर्गैः
कण्डूतिमत्स्कन्धयुतः स भूपः ।
जगत् समस्तं च शशास सम्यक्
यथा दरिद्रो निजभूमिलेशम् ॥ 4

## 5

## श्रीरामावतारपटलः

(திரு அவதாரப்படலம்)

अथैकदा ब्रह्मसुतं विशुद्धं
नत्वा वसिष्ठं रघुवंशभूपः ।
"पिता च माता च तपो हरिश्च
समस्तमन्यन्मम तु त्वमेव" ॥ 1

"विप्रास्तदन्ये मुनयो विशोका-
स्त्वासन्, गते मय्यथ राजशून्यैः ।
एतैर्महद्दुःखमवाप्स्यते तत्
सेयं व्यथा मां दहती" त्युवाच ॥ 2

भेरीरवैः सौधमुखे प्रपूर्णे
मुक्ताकिरीटोज्ज्वलिते महीशे ।
इत्थं ब्रुवाणे कमलासनस्य
सूनुर्वसिष्ठो हृदि चैव मेने ॥ 3

दुग्धाब्धिमध्ये भुजगे शयानः
दृष्ट्वा हरिं मेघनिभः सुरौघान् ।
"हन्यां सुघोरानसुरान्" इतीत्थं
यदाह तच्चिन्तितवान् वसिष्ठः ॥ 4

"राजन्! महात्मन्! समस्तलोक-
नियन्तृपुत्रप्रदयागपूर्वां ।
त्वं वै विशोको भवितासि सत्यं"
इत्यब्रवीत् स स्मृतपूर्ववृत्तः ॥ 5

यो जन्तुमात्रेण जनान् हि पश्येत्
यो ब्रह्मचर्यगुणशान्तियुक्तः ।
स ऋष्यशृङ्गो यदि यज्ञकृत् स्यात्
तदा सुताः स्युरिति विप्र आह ॥ 6

तदा ज्वलद्वह्निसमानकेशं
रक्तान्तनेत्रं ज्वलितं च भूतम् ।
सुवर्णपात्रेऽमृततुल्यपिण्ड-
मादाय वह्नेः स्वयमाविरासीत् ॥ 7

तदस्यश्रृङ्गानुमतिं गृहीत्वा
पिण्डांशमेकं न्यदधात् स राजा ।
रक्ताधरायाः किल नीलधूम्र-
केश्याः करे कोसलराजपुत्र्याः ॥ 8

हंसैः समाकीर्णनदीतटाक-
वनैर्युतं देशमपालयद्यः ।
करे ददौ केकयराजपुत्र्याः
स तु क्रमेणैव विभज्य पिण्डम् ॥ 9

वीर्येण शत्रोरतिभीषणस्य
निमेः कुले जातमहीश एषः ।
पूर्वक्रमात् पिण्डमिमं सुमित्रा-
हस्ते ददौ, देवपतिस्तुतोष ॥ 10

पुनः सुमित्राकरयोः स पात्र-
शीर्णं च पिण्डं प्रददौ गुणाढ्यः ।
तदाऽस्फुरत् शत्रुषु वामभागः
तद्भिन्नभागो भुवि सर्वजन्तोः ॥ 11

प्रसूतिकाले निकटागते तु
   दर्पोद्धतायां किल भूमिदेव्याम् ।
पुनर्वसुप्रख्यसदृक्षशोभि-
   दिनाशके कर्कटलग्नयुक्ते ॥ 12

वेदैरवेद्यं निजगर्भलीन-
   समस्तलोकं जलदाभनाभम् ।
ज्योतिस्तदेकं सुषुवे प्रपन्न-
   भाग्याय सा कोसलराजपुत्री ॥ 13

सुराः सुरा व्योम्नि समेत्य दिक्षु
   सुरेशमुख्या विनताः स्तुवन्ति ।
पुष्यर्क्षयुक्ते शुभमीनलग्ने
   कैकेय्युदारं तनयं प्रासूत ॥ 14

दृक्षाववीर्याचलकोपनेन्द्रे
   इष्टे दिवं प्राप्य सुरैः समेत्य ।
सार्पर्क्षयुक् कर्कटलग्नयोगे
   कनीयसी लक्ष्मणमप्यसूत ॥ 15

कनाददयोऽथटनागधार्यां
   दृष्टा तदा भूः स्तनयोऽप्यतूलन् ।
कनाद्यनाशापुन सिंहासौ
   यदा सुमित्रा सुषुवेऽप्यनुजम् ॥ 16

दास्यो नृपं प्राप्य शुभं निवेद्य
तुष्टाः सुनृत्ताः, ग्रहतारकाणाम् ।
स्थितिं द्विजास्तत्र विमृश्य लोक-
बाधा नचेतः परमित्यवोचन् ॥ 17

श्रान्तं गजेन्द्रं ननु नक्रयुद्धे
"हे शेषशायिन्"इति चाक्रन्दन्तम् ।
आगत्य तं पालयतस्तु विष्णोः
चक्रे वसिष्ठः किल रामनाम ॥ 18

धारस्थितेनामलकेन तुल्य
विस्पष्ट नानाव्रत बोधि वेदे ।
यो वेत्ति सारं स मुनिश्चकार
तदन्यथाख्यो भरताख्यनाम ॥ 19

दुर्वारवीर्योज्ज्वल तेजसोऽथो
व्यधान्मुनिर्लक्ष्मणनामधेयम् ।
तदा व्यनश्यन् कुहकाश्च दैत्याः
देवा व्यतुष्यन् पृथिवी विशोका ॥ 20

"प्रशस्त मुक्ताग्र निबद्धपद्म-
समान भास्वद्रमणीय कान्त्या ।
विरोधनाशो भवती"ति मत्वा
शत्रुघ्नसंज्ञामिनरस्य चक्रे ॥ 21

## ७

## विश्वामित्रे रामसमर्पणपटलः

(கையடைப்படலம்)

व्योम स्पृशन्तं मणिमण्डपं यं
सकल्पवृक्षोज्ज्वल लोक देवाः ।
आयान्ति द्रष्टुं स्वसभा भ्रमेण
तं राजराजः समुपागमत् सः ॥

"उत्पाद्य नूत्नं जगदेव देवान्
तथा विधिं नूत्नमहं सृजेयम्" ।
इत्येव वक्ता पुरतस्तु राज्ञः
समाययौ गाधिसुतो मुनीन्द्रः ॥

"कैलासदुग्धाम्बुधि सत्यलोकान्
महेन्द्रलोकं च तथाऽप्ययोध्याम् ।
विना शरण्यं क च मादृशानां
भवेदि"त्योह नृपं मुनी

"तौ का· मखेऽस्मिन्
सम्प्र·
रामं त्वमुक
समो मुं

निशम्य वाक्यं स नृपः सुतो मे
    बालो न योद्धा, "विधिरुद्रमूलम् ।
अपोह्य विघ्नं स्वहमेव यज्ञ-
    गोप्ता प्रभो ! स्यामि"ति सम्बभाषे ॥ 5

क्रुद्धं तदा गाधिसुतं वसिष्ठ-
    स्सम्श्वास्य राजानमुवाच, "नृप ! ।
सुतस्य नानाशुभयोगकाले
    न तन्निरोधो भवताऽत्र कार्यः" ॥ 6

अक्षय्यतूणीर मनाश्यसारं
    अंसद्वये शैलवदुन्नते च ।
बद्ध्वा कृपाणं स तथैव वामे
    त्वेकं धनुर्लोकपतिस्त्वगृह्णात् ॥ 7

राज्ञः पितुर्देह विनिर्गतैस्तैः
    प्राणैः समो भ्रातृ समेतरामः ।
छायेव तं कौशिक मन्वगच्छन्
    तीर्त्वा ययौ तत्पुरसालमार्गम् ॥ 8

तपस्विलभ्योत्तमपावनाच्च
    श्रेष्ठामयोध्यां समतीत्य ते तु ।
नृत्यद्वधू नूपुरतुल्य हंस-
    निनादयुक्तां सरयूमवापुः ॥ 9

ऊधुस्वयस्ते मुकुलस्तनीनां
तत्कुन्तलाभै र्भ्रमरैरुपेते ।
इक्षोः सगद्भिश्च मधुप्रवाहैः
सम्पूर्ण केदारकृते वनेऽस्मिन् ॥

मेघावृतत्वात् गजवत्स्थितस्य
महीधरस्याग्रमयोपयान्तु ।
अश्वेषु सप्तस्वपि सूर्यमूर्तेः
तीर्त्वा नदीमारुरुहुश्च पारम् ॥

दैवैर्द्दरेण्याद्भुतयागजन्य-
धूमावृत काननमत्र दृष्ट्वा ।
सर्वोत्तमो योगिवरं प्रणम्य
रामः "किमेतद्वन मि"त्यपृच्छत् ॥

## 7

## ताटकावधपटलः

(தாடகைவதைப்படலம்)

स्थित्वात्र कामः किल चन्द्रचूडं
विव्याध बाणैः, शिवफालनेत्रात् ।
कोपाग्निना पुष्पसमेऽस्य देहे
दग्धे स्वयं प्रापदनङ्गभावम् ॥

ददाह शम्भुः कुपितोऽत्र कामं
तदङ्गभस्माङ्कितदेश एषः ।
अङ्गाभिधं तत्स्थलमप्यतोऽभूत्
कामाश्रमाख्यं, शृणु वेदवेद्य ! ॥ 2

इत्थं मुनौ शंसति तत्र गत्वा
प्रत्युद्गतैः सत्पथगैश्च विप्रैः ।
स्थित्वा समं मध्यगते च भानौ
ययुस्त्रयस्तं मरुप्रदेशम् ॥ 3

वक्तुर्हि जिह्वा च महान्धकारो
ब्रह्माण्डकोशो मरुभूमिलापैः ।
विद्युत्पयोदाशनिसूर्यमुख्याः
दग्धा यदि स्युः किमिहास्त्यदग्धम् ॥ 4

शार्ङ्गी रणे मुञ्चति बाणवर्षं
शूरस्य तत्कैतववञ्चितस्य ।
विनष्टमानाख्य मणेर्मनोवत्
आसीत् सुतप्तं मरुकाननं तत् ॥ 5

निहत्य दुःखप्रद कर्मयुग्मं
कामादिकान् त्रीन् समतीत्य दुर्गान् ।
विमुक्तिकामस्य च पण्यवस्त्वाः
हृत्तुल्यमेतद् विपिनं तु शुष्कम् ॥ 6

अथेङ्गितज्ञौ मुदितौ कुमारा-
वगृह्णतां कौशिकपादयुग्मम् ।
बलादि मन्त्रद्वयमाप्य तस्मात्
तौ जेपतुस्तत् हृदये निधाय ॥

स्मृते तु मन्त्रे प्रलयाग्नितुल्यं
उज्ज्वलद्वने यत्तु गताश्रयोऽति ।
शीतोदके यानसमं तदासीत्
उवाच रामो मुनिमानतः सन् ॥

गङ्गां च माल्यं वहतः स्वमूर्ध्नि
शिवस्य दृष्ट्या किमु दग्धमेतत् ।
"कुभूपराज्यादधिकोऽत्र नाशः
कुतोऽस्ति सर्वज्ञ वदे"त्यपृच्छत् ॥

"या जीवति प्राणिवधेश्च नित्यं
सहस्रमातङ्गबलान्विता या ।
कालाकृतिर्या चरितं नु तस्याः
शृणु त्वमि" त्याह मुनिः स रामम् ॥

दिनेषु यातेष्वथ ताटकायाः
लक्ष्मीसमानोज्ज्वल कान्तिभल्याः ।
गर्भे तु मारीच सुबाहुसंज्ञौ
जातौ सुतौ प्राणिभयङ्करौ तौ ॥

अगस्त्यकोपेन तथैव शप्तौ
  योद्धुं ह्यशक्तौ च सुमालिसंज्ञम् ।
पौलस्त्य मातामहमेत्य चार्तौ
  "पुत्रौ भवावस्त्वि"ति चोचतुस्तौ ॥ 12

स्थित्वा चिरं नागतले च तेन
  "मन्मातुलौ तावि"ति रावणेन ।
स्तुतौ जगन्नाशकरौ महद्वत्
  तौ भ्रातरौ संभ्रमतः सवेगम् ॥ 13

त्यक्त्वा सुतौ कुंभसुतस्य शापं
  स्मृत्वा ज्वलद्धृदि समानकोपा ।
सा राक्षसी कानन मेतदाप
  ज्वालापरीताग्नि वृतं समन्त त् ॥ 14

सा घोरकृत्या सहितं समृद्धया
  तत्काननं नाशयति स्म पश्चात् ।
चित्ते नृणां लब्धपदो हि लोभः
  विनाशयेत् स्वगुणान् यथैव ॥ 15

दशाननाज्ञा वशमेत्य शैल-
  समानसारा मम यज्ञहन्त्री ।
तदङ्गदेशस्य जनान् सर्वस्थान् -
  हत्वा भ्रमत्यत्र पयोदनील ! ॥ 16

तद्गाधिसूनोर्वचनं निशम्य
शङ्खार्दहस्ताधृतशार्ङ्गधन्वा ।
सुगन्धपुष्पार्हशिरः प्रकम्प्य
"कुत्रेयमास्ते कथये"त्यपृच्छत् ॥

शैलाभनाभे द्रुगतेस्तु वाक्यं
जितेन्द्रियो गाधिसुतो निशम्य ।
"अत्रास्ति सा चे" त्यभिधानतः प्राक्
तमाञ्जनाद्रिप्रतिमाऽऽविशत्ताः ॥

शैलाव्ययन्नूपुरबद्धपाद-
घातोत्पन्नगर्ते जलधिर्विवेश ।
बिलं गते भीतयमेऽनुयाते
शैलैर्युता सा पुरमाजगाम ॥

"समस्तजन्तौ निहते मयैव
सुरनाधमास मम नात्र लभ्यम् ।
इत्याशयाद्वा विधिना किमाताः?
तत्कथ्यतामि' त्यवदत् पिशाची ॥

ज्ञात्वापि भावं स मुनेर्दयालु
मुमोच बाणान् न हि तद्वधार्थी ।
प्राणापहन्त्रीमपि घोरकृत्यां
रामः स्त्रियं तां हृदि मन्यते स्म ॥

सनातनं धर्ममहं ब्रवीमि
क्रोधादहं नैव वदामि तस्याम् ।
नेदं दयाकृत्यमिमां जहि त्व-
मित्याह रामस्य पुरः स विप्रः ॥ 22

रामप्रमुक्ता निशिताश्च बाणाः
तद्वज्रतुल्यं हृदयं विभिद्य ।
गता बहिः, ज्ञानिगिरीरितार्थाः
यथा जडानामपयान्ति चित्तात् ॥ 23

व्यावृत्तवक्त्रा रुधिरैररण्यं
आपूर्य तत्रैव पपात यद् सा ।
बभूव तद्रावणभाविनाश-
प्रबोधिकेतोः पतनेन तुल्यम् ॥ 24

निशाचरप्राणरसं पिपासुः
अटन् यमः प्राप तदत्र पूर्वम् ।
विरिञ्चितुल्यस्य मुनेर्विनेयः
रामो यदाद्यं रणमत्र चक्रे ॥ 25

"प्राप्ता वयं स्वीयपदं, न बाधा
त्यक्तेऽद्य दिव्यायुधजालमस्मै ।
रामाय देही"ति मुनिं प्रबोध्य
देवा ययुः पुष्पमवाकिरन्तः ॥ 26

## ४

## विश्वामित्रयागपटलः

(வேள்விப்படலம்)

गतेषु देवेष्वथ पुष्पवृष्ट्या
शीतं मरुप्रान्तमतीत्य विप्रः ।
दारिद्र्यहन्त्र्या शतयप्यथाचा
समायुधान् राजसुते ददौ सः ॥

कृतानि सत्कर्मफलानि सद्भिः
जन्मान्तरे यान्ति यथा स्वयं तान् ।
तथा मुनौ यच्छति रामभद्रं
दिव्यायुधा हर्षयुतास्तमापुः ॥

क्रोशद्वयं तेषु गतेषु तत्र
श्रुत्वा ध्वनिं, "जातमिदं नु कस्मात् !" ।
इत्थं मुनिं पृच्छति रामभद्रे
आरब्धवान् वक्तुमसौ तपस्वी ॥

"तन्मानसाह्वयात् सरसः प्रवृत्त-
नद्या सरय्वा सह गोमतीयम् ।
युता ध्वनत्येव"मुवाच विप्रः
ते कौशिकाख्यां प्रययुर्नदीं ताम् ॥

"हरस्तुता पुण्यनदी च केय"-
मित्थं तु रामेण मुनिः स पृष्टः ।
ऊचे, गुणी ब्रह्मसुतः कुशाख्यः
जज्ञे यतः पुत्रचतुष्टयं प्राक् ॥ 5

नदीत्वमासा मम सोदरीति
श्रुत्वा कुमारावथ नातिदूरम् ।
गतौ, स रामो "विपिनं किमेत-
दि"तीव पप्रच्छ, मुनिर्बभाषे ॥ 6

मत्तैव दैवं क्षिति मन्यमान-
नारीमनोवद्विपिनं विशुद्धम् ।
वेदैस्तथान्यैर्मुनिभिस्त्वमेयः
पुरात्र विष्णुर्व्यदधात्तपांसि ॥ 7

नीचो हरिः श्लाघ्यगुणस्त्वदित्यां
त्रिकालवित्काश्यपसंज्ञके च ।
भूत्वा सुतोऽयं वटवृक्षगर्भ-
बीजं यथा वामनतामवाप ॥ 8

गत्वा बलिं तस्य वचो निशम्य
"स्वकाश्रितादप्यधिकप्रदातः ! ।
त्वय्यर्थिनो भाग्ययुता न चान्ये"
इत्याह सोऽयं धृतकुब्जवेषः ॥ 9

तुष्टो बलिः, "वाञ्छितमत्र किं वे-"
त्यूचे, "दया चेत् त्रिपदप्रमाणाम् ।
प्रयच्छ भूमि"मिति वामनोक्तः
बलिस्तथेत्याह रुरोध शुक्रः ॥

"मायामयं रूपमिदं महात्मन् !
न वामनोऽयं घननीलकायः ।
पुराण्डजाण्डान् प्रसतो हरेस्तु
जानीहि रूपं त्विद"माह शुक्रः ॥

"दानाद् करे चोर्ध्वगते मदीये
पूर्णो घनाभो हरिरेविषेवः ।
अधः करो याचति चेत्तनो मे
भाग्यं किमन्यत् त्वमिदं न वेत्सि ॥

"नासौ मृतो यं मृतमीरयामः
परन्तु हस्तैः किल याच्यते यैः ।
ते वै मृता, तेषु च दानशीलाद्
अन्ये किमासन् भुवि कीर्तिकायैः ?" ॥

"ये निन्दकास्ते रिपवो न, किन्तु
ये चात्र दातॄन् किल वारयन्ति ।
ते दारशत्वात्मविघातकाश्च
निन्द्यं ततो मे"ति बलिर्जगाद ॥

आक्रम्य लोकान् सकलान् पदाभ्यां
स्थानं ह्यलब्ध्वा बलिमस्तके सः ।
न्यधात्तृतीयं तुलसीधरोऽसौ
कुब्जो ह्ययं, हे धृतचापपाणे ! ॥ 15

दुष्कर्मनिर्मूलन ! राम ! तस्मात्
इदं वनं प्रेक्ष्य च जन्महीनाः ।
भवन्ति सर्वे, श्रुतिगम्ययज्ञं
कर्तुं मम स्थानमितः किमन्यत् ? ॥ 16

“यक्ष्येऽहमत्रे”ति वदन् मुनीन्द्रः
वनेन गत्वा मखपातृबालम् ।
सम्भृत्य रम्यौ मखरक्षणार्थं
नियोज्य तावारभताथ यज्ञम् ॥ 17

भूपालपुत्रौ मुनिना कृतं तं
यज्ञं सुराणां हितसाधनार्थम् ।
अनन्यलभ्यं दिनषट्कमव्य-
मरक्षतां पक्ष्म यथा हि नेत्रम् ॥ 18

तद्यज्ञसंरक्षक वीरसून्वोः
ज्येष्ठो मुनिं प्रेक्ष्य “गुणप्रधान ! ।
प्राप्स्यन्ति घोरा भवदुक्तपूर्वाः
दैत्याः कदेदं स्थलमि” त्यपृच्छत् ॥ 19

मौनान्मुनिर्नोत्तरमाह, रामो
नत्वा मुनिं प्राप्य बहिर्ददर्श ।
घोराशनेर्भीषणमेघकल्पान्
निशाचरान् व्योम्नि विरावयुक्तान् ॥

अग्निं वमच्छूलधरासुराणां
रक्तं च मांसं च महाग्निकुण्डे ।
यथा पतेन्नैव तथाञ्जनेन्नः
शरैर्वितानं कृतवानिहोर्ध्वम् ॥

तपस्विनो वञ्चकदैत्यभीताः
"त्वामञ्जनश्याम! वयं प्रपन्नाः" ।
इत्यूचिरे जातविषादयाच्ञैः
भीत्याऽसुराः सोमशिखं प्रपन्नाः ॥

तत्ताटकायाः किल वीरसून्वोः
मारीचमेकं विनिरास्य सिन्धौ ।
सुबाहुमन्यं निजघान दिव्यं
धनुस्तु रामस्य रमापतेस्तत् ॥

सृष्ट्वा जगत् तज्जठरे वहन् त्व-
मत्राद्य यज्ञं मम यत्त्वरक्षः ।
पुण्यं मया तेन कृतं ह्यवैमि
न ते महत्कार्यमिदं विजाने ॥

अथैवमुक्ते, कुसुमैः समृद्धे
वने तपःशीलमहर्षिमध्ये ।
गुणाकरं कौशिकमत्र रामः
"कार्यं मया किं वद"चेत्यपृच्छत् ॥ 25

इदं ह्यसाध्यन्त्विति यज्ञगत्यां
तच्चे सुसाध्यं, महदस्ति कार्यम् ।
तदस्तु पश्चात्, मिथिलेशयज्ञं
गच्छेम द्रष्टुं त्वि"ति विप्र आह ॥ 26

௭

## अहल्यापटलः

### (அகலிகைப்படலம்)

स्थलागह्वरपुलिनस्तनीं तां
विकासिपुष्पाकरसुमेखलाढ्याम् ।
शोणानदीरूपवधूं उदात्त-
सुमध्यमां प्रापुरिमे त्रयोऽपि ॥ 1

नदीं गतेष्वेषु रविः परेद्युः
शैलप्रदानार्घमुपस्थितानाम् ।
तमःस्वबिम्बप्रतिपन्नतापशान्त्यै
किं पश्चिमाब्धौ सरथो ममज्ज ॥ 2

जलेभवत्पद्मगृहे दलाढ्य-
कवाटबन्ध्ये भ्रमरा निशासु।
उत्थाय पुष्पाढ्यवनं यदापुः
उवास तत्प्राप्य मुनिः सुताभ्याम् ॥

पृष्टो "वनं किन्त्विति" राघवेण
दुष्कर्मनिर्मूलनयागकर्ता ।
"पुरा दितिः स्वीयसुतार्थमत्र
तपश्चकारे"ति जगाद वाक्यम् ॥

एतादृशं स्थानमिदं, शिवाभ्यां
जातो हि गङ्गापयनैरधार्यः ।
स कार्तिकेयो ववृधे बलाढ्य-
स्तत्रेत्यवोचत् स च गाधिसूनुः ॥

नीले हरेर्नाभितले यथैव
जायेत पद्मं विधिना सहैव ।
भित्वान्धकारं जगतां नियन्ता
रविस्तथाभूद् भुवि नीलसिन्धौ ॥

त्रिमूर्ति तुल्यास्तत एव गत्वा
रुद्रोत्तमाङ्गोद्भवजाह्नवीं ताम् ।
क्वेरजावत् कुसुमावकीर्णां
कूलद्वयानापुरिभे मनोज्ञाम् ॥

गङ्गाचरित्रं वद तात! सर्व-
मित्याह रामो, "मम नाथ! वत्स!।
त्वद्वंशजन्मा सगरस्त्वयोध्या-
पतिर्बभूवे"ति मुनिर्बभाषे ॥ 8

ब्रह्माण्डभातु पदयोश्च विष्णोः
भूत्वा विधिमाहात्मुपाददीर्यम्।
धृता हि रुद्रेण भगीरथेन
नीता भुवं प्राप वियन्नदीयम् ॥ 9

साश्चर्यमाकर्ण्य मतौ कुमारौ
गङ्गां समुत्तीर्य विशालसंज्ञम्।
नतं च पृष्ट्वा कुशलं महीश
विदेहदेशं प्रययतुरयोऽपि ॥ 10

देशं प्रविश्य मिथिलानगर्याः
प्राकारबाह्ये विरचय्य वासम्।
शीलच्युता योगिवधूमहल्यां
शिलामयीं शून्यतले व्यपश्यन् ॥ 11

शिलां गते राघवपादरेणौ
तेन स्वकं प्राप वपुस्त्वहल्या।
ज्ञानी यथा प्राग्वियोगकाले
देहं निजं प्राप्य हरिं भजेत ॥ 12

गङ्गां भुवं नीतवतश्च राज्ञो !
वंशस्य! या तिष्ठति विद्युदाभा[१]।
दुष्टस्य चेन्द्रस्य सहस्रनेत्र-
दातुर्मुनेः सा गृहिणीत्यवोचत् ॥

इत्थं मुनौ शंसति पद्मजायाः
पतिः, "विचित्रा खलु लोकयात्रा ।
किं कर्म चान्यद्वद लोकमातु-
रस्याः स्थितेः कारणमि" त्यपृच्छत् ॥

इन्द्रोऽप्यहल्यानयनेन मार-
बाणैर्हतो जीवितुमेव दाऽसौ ।
विशुद्धिमद्गौतमवेषधारी
तं चापि विप्रोष्य विवेश शालाम् ॥

अमोघशापस्य वरस्य दाता
स गौतमः प्राप गृहं, भयार्ता ।
तस्थौ सदा गर्हतमा त्वहल्या
शक्रो भयाद्याति बिडालवेषः ॥

स गौतमो वृत्तमिदं विदित्वा
क्रोधोज्ज्वलो बाणसमानवाचा ।
"त्वय्यङ्गनाचिह्नसहस्रयोगो
भूयादि"तीन्द्रं ह्यशपत् तथाऽऽसीत् ॥

अवाप्य लज्जामथ निर्वृतां च
ययौ सुरेशः, स्वगृहमहल्याम् ।
"वेश्यासमा त्वं भज वै शिलात्व-
मि"त्याह विप्रः, न्यपतत् तथा सा ॥ 18

"सन्तः सहन्तेऽज्ञकृतापराधान्
तद्ब्रूहि मार्गं त्वि"ति भार्ययोक्तः ।
"श्रीरामपादोद्धतरेणुभिस्त्वं
विमोक्ष्यसे" चेति मुनिर्बभाषे ॥ 19

अथेन्द्रहेतोर्विधिमुख्यदेवैः
स्तुतो मुनिः शान्तमनास्तदिन्द्रे ।
अपोह्य चिह्नानि सहस्रनेत्रा-
ण्यदादहल्याप्यभजत् शिलात्वम् ॥ 20

एवं पुरासीत् किल नीलमेघ !
नेतो जना निम्नगतिं प्रयान्ति ।
अहं पुरा ते करयोः प्रभाव-
मपश्यमथात्र पदप्रभावम् ॥ 21

तत्साध्वकृज्जीलवपुः स रामः
ध्यात्वा समस्तं किल कौशिकोक्तम् ।
"पत्युर्हितार्थं भज तं च मातः !
याहि त्वमि" त्याह ननाम तां च ॥ 22

तस्यास्तनाभस्य च पादधूल्या
स्वरूपमाप्तां मनसा विशुद्धाम् ।
"इमां गृहाणे" त्यथ कौशिकोक्तः
स गौतमो ब्रह्मसमोऽग्रहीत्ताम् ।

रामो गुणी गौतममत्र नत्वा
समर्थ्य तस्मै वरशीलयुक्ताम् ।
तां, गाधिपुत्रेण वनान्यतीत्य
ददर्श सालं मिथिलानगर्याः ॥

## 10

## मिथिलादर्शनपटलः

(மிதிலைக்காட்சிப்படலம்)

मत्पुण्यतः श्रीः कमलं विहाय
अत्यत्र जातेति पुरीयमुक्त्वा ।
ध्वजाख्यहस्तैः कमलाक्षरामं
"त्वमेहि शीघ्रं" त्विति साह्वयत् किम् ! ॥

सिक्त्वा शलाकाममृतेन यस्याः
मारोऽन्यरूपं न शशाक कर्तुम् ।
तां जानकीं प्राप्य सरोजतुल्यां
रामादयस्तां मिथिलां प्रविष्टाः ॥

मिथिलानगरवर्णनम् :—

विरक्तनारीनरसङ्घमुक्त-
सुवर्णभूषान्वितराजमार्गे ।
अगस्त्यपीताब्धिसमे च तारा-
युग्व्योमतुल्ये प्रययुस्तयोऽपि ॥ 3

मृदङ्गवीणास्वगानयोगं
निरीक्ष्य नेत्रेण करौ सलीलम् ।
चित्तं तु नेत्रानुगतं विधाय
नृत्यद्वधूवृन्दसमामपश्यन् ॥ 4

सुवर्णमुक्तागरुतालपिञ्छ-
राशिं तु केदारतले विधातुम्
कृषीवलानामखिलार्थदातृ-
कावेर्यभिख्यापणमार्गमापुः ॥ 5

वीणाशलाकां स्वकरे प्रचाल्य
बध्वा च तन्त्रीः हृदये च पाणौ ।
कृत्वा, समन्दस्मितगायिकानां
गानं पिबन्तः प्रययुः स्वकर्णैः ॥ 6

पुष्पापचित्यां रतकीरवाचां
स्त्रीणां हि गत्या विजितांश्च हंसान् ।
दृष्ट्वा च यत्र भ्रमरा नदन्ति
वनं तथाभूतमिमे ह्यपश्यन् ॥ 7

सौगन्ध्य माधुर्य सुवर्णकान्ति-
मनोज्ञकाव्यादिमयीं तदेकाम् ।
कन्यागृहोर्ध्वस्थल पूर्वभागे
त्रयोऽपि दृष्ट्वा क्षणमप्यतिष्ठन् ॥

सीतादेवीवर्णनम् :—

ब्रह्मादयः सुष्ठु विमृश्य सर्व-
वस्तूपमानं किल यां वदन्ति ।
सीतास्वरूपा यदि सा रमा स्यात्
किमन्यदस्या उपमानमस्ति ॥

उमादियन्यां प्रसमीक्ष्य सीतां
तत्पूर्णशोभानुभवाय मर्त्याः ।
वाञ्छन्ति नेत्रद्वयनिर्निमेषं
नेत्रद्वयादप्यधिकं च देवाः ॥

तदन्यनारीं मधु भाषमाणां
सृजेति चोक्तोऽपि विधिर्न शक्तः ।
सुरैस्तु सिन्धुर्बहुधार्थितोऽपि
श्रेष्ठं सुधान्यत्र सृजेयमेव ॥

इन्द्रादिदेवेप्सितमेनकाद्याः
शूलान्तनेत्रास्तु शरीरमस्याः ।
क्षिपन्ति दृष्ट्वा मुखरूपचन्द्रा-
स्तासां दिवाचन्द्रसमा बभूवुः ॥

विहाय पद्मं भुवमेत्य सीता-
स्थित्यै चिरं कायविशेषपूर्वम् ।
धर्मेण वा विप्रवरैः सुरैर्वा
किं वा तपस्तत्तमहं न वेद्मि ॥ 13

प्रियाश्च सख्यः "हरिणीसमेति
मातेति पीयूषसमे"ति चोक्त्वा ।
तस्याः पुरस्ताद्विकिरन्ति पुष्पं
सीता बभौ पुष्पचये प्रयान्ती ॥ 14

सुमेखलान् पुररुहार-
समेतवल्लीसदृशाङ्गनासु ।
स्थितासु सीता शतकोटिविद्यु-
न्मध्ये च तासां महिषीव रेजे ॥ 15

कान्तं च शुक्लं च विचित्र्य दृष्ट्वा
स्थितामिमां को भुवि वर्णनार्हः ।
दृषाऽश्मकुड्यान्यपि यां समीक्ष्य
द्रवीभवेयुश्च तथा बभौ सा ॥ 16

स्वप्रेक्षकान् याः किल तोषयन्ति
तासां वधूनामपि मैथिलीयम् ।
सुस्वादपीयूषसमा यदि स्यात्
प्रभोर्हि रामस्य कथं भवेत्सा ॥ 17

रम्याणि नानाभरणानि पूर्वं
रम्याङ्गनासङ्गममाप्नुवन्ति ।
तान्यद्य सौन्दर्यकराणि सीता-
सङ्गात् स्वयं सुन्दरतामवापुः ॥

**सीतारामयोः प्रथमदर्शनम् :—**

एवं स्थितायां जनकात्मजायां
तयोश्च नेत्रे हृदये मिथश्च ।
यथा मिलेतां च तथा स रामः
ददर्श सीतामथ सापि रामम् ॥

तस्याः सुतीक्ष्णौ ननु दृष्टिशूलौ
अंसद्वये वीर्ययुते च तस्य ।
निपेततुः, राघवरक्तनेत्रे
श्रीदेवतायाः कुचयोर्निमग्ने ॥

बद्ध्वा मिथो दर्शनरूपरज्ज्वा
परस्पराकृष्टमनःसमेतौ ।
धन्वी स रामो वरजानकी तौ
अन्योन्यचित्ते क्रमशः प्रविष्टौ ॥

गुणी स रामो तनुमध्यमा सा
प्राणैरभिन्नावपि भिन्नकायौ ।
विहाय दुग्धाम्बुधितल्पमेतौ
पुनर्मिलेतां यदि किन्नु वाच्यम् ! ॥

सा दीर्घनेत्रैरिह निर्निमेष-
मालक्ष्य चित्रप्रतिमेव तस्थौ ।
चिन्ताधृतिभ्यामनुगम्यमानो
रामोऽपि सार्कं मुनिना तिरोऽभूत् ॥ 23

सीताविरहवर्णनम् :—

अन्तर्हिते सविधि रामचन्द्रे
प्रमत्तचित्ताभिधवारणस्य ।
धैर्याङ्कुशे दूरगते तु तस्याः
लज्जापि नष्टेति किमत्र वाच्यम् ॥ 24

स्वमध्यतुल्यं कृशदेहचित्त-
समन्वितायाः किल नेत्रमार्गात् ।
देहं समं प्राप्य स कामरोगः
व्याप्नोति तक्रं तु यथैव दुग्धे ॥ 25

स्वीयां दशां वक्तुमपारयन्ती
स्मृत्वैव तं मूकसमा रुदेत् सा ।
कामोऽपि तस्या हृदि बाणमेकं
प्रायुङ्क्त काष्ठे ज्वलिते यथाग्नौ ॥ 26

सुमेखलाधैर्यसुशङ्खमाला-
लावण्यविज्ञानमुखैर्विहीना ।
सीता विरेजे मथनात् सुराद्यैः
समस्तभाग्ये रहितो यथाब्धिः ॥ 27

सखीभिः सीतानयनम् :—

विस्रस्तभूषां च विनष्टलज्जां
विध्वस्तरूपां मदनस्य बाणैः ।
विद्रस्तनीं त्रस्तमृगीसमानां
कृच्छ्रेण सीतामनयन् हि सख्यः ॥

मनोज्ञसीताकरपादतुल्य-
सुपल्लवैरास्तृतपुष्पतल्पे ।
शीतैश्च नीहारगणै रुपेते
सख्योऽत्र सीता शयितामकार्षुः ॥

सखीकृतशैत्योपचारः—

वने वसत्क्रूरनिषादबाण-
विध्वस्तकेकासदृशी च सीता ।
प्रसूनशाखेव च कामवह्नि-
तप्ताऽपतत् म्लानतमा हि तल्पे ॥

विद्धानि पुष्पाण्यपि तच्छरीरे
तरेद्दग्धिसानि सुचन्दनानि ।
शीर्णानि वह्नेः कणवत्तनङ्ग-
तापेन दग्धानि च पल्लवानि ॥

तस्याश्च दासीजननीभगिन्य
　　स्तस्माद्विपण्णा हृदि धैर्यहीना ।
श्वश्रू ह्यशक्ता किल रोगमस्या
　　नीराजनं दीपधिया त्वकुर्वन् ॥ 32

पार्श्वे समुद्यद्व्यजनानिलेन
　　कामानले सततजृम्भमाणे ।
दग्धेषु माल्याभरणादिकेषु
　　द्रवत्सुवर्णप्रतिमेव साऽभूत् ॥ 33

सीताविरहप्रलाप —

तमोवृतं पुष्पवनं किमेत-
　　त्किमस्य बाहू घनरत्नशैलौ ।
नेत्रे सरोजे पुरुहूतचाप
　　युतो घनः किं मुखमात्मनाम ॥ 34

मच्चित्तमाविश्य धृतिश्च लज्जा
　　विनाश्य मे प्राणमथाग्रहीच्च ।
कामो न चाय किल तस्य पाणौ
　　स्थितं धनुर्नेक्षुमयं विभाति ॥ 35

नारीस्वभावस्थितरूपलज्जा
　　ज्ञानानि मय्यद्य न सन्ति तस्मात् ।
पद्भ्यां सखेद भुवि योऽगमत् स
　　किं नेत्रमार्गाऽऽगमनार्हचोर ? ॥ 36

तन्नीलरत्नप्रतिमा शिखा वा?
हस्तौ नतौ चन्द्रसमं मुखं वा ।
अंसौ न वा, किन्तु स मन्दहासः
प्राणान् मदीयानहरच्च तस्य ॥

न वा मनोहारिविशालवक्षः
न केवलं पद्मसमानपादौ ।
परन्तु यन्मत्तगजेन तुल्यो
ययावयं तद्धृदि मे सुलग्नम् ॥

नेत्रे यतः पद्मसमे निमेष-
युते च तस्मान्न हि देव एषः ।
चापं करे वक्षसि यज्ञसूत्रं
वहन्नसौ राजकुमार एव ॥

मदीयहृद्धैर्यसमाह्वयय-न्त्र-
पिनद्धकन्यावरणं विनाश्य ।
जगाम यस्तं पुनरेव नेत्रैः
प्रियेव दृष्ट्वा यदि तद्वरं मे ॥

एवं तथान्यच्च समालपन्त्या
"रामोऽत्र तस्थौ, स जगाम चे"ति ।
ब्रूयादियं प्रोत्थितकामवेगात्
बहूनि मत्वा हृदि चिन्तयेत् सा ॥

सूर्यास्तमनवर्णनम् :—

सीताशरीरस्थितकामवह्नि-
तापं स्वयं सोढुमशक्त एषः ।
सूर्योऽपि कम्पिस्वकरैरुपेतः
ममज्ज वेगात्किमु पश्चिमाब्धौ ॥ 42

पतङ्गशब्दोदितवाद्यघोषैः
पयोधिशब्दोदितनूपुरेण ।
नीलान्धकाराभिधकञ्चुकेन
युक्तेन भूतेन समा हि सन्ध्या ॥ 43

निशामुखप्रख्यभुजङ्ग ! हिंसां
करोषि, मारो मयि बाणमोक्ता ।
प्राणोऽपि चैको न हि मुक्तिरस्मात्
मुक्ते कथञ्चिन्मयि को विरोधः ! ॥ 44

रामो यतो कोऽपि न तन्निरोद्धा
बाणप्रयोक्ता मदनेन किं त्वम् ।
प्रचोदितः क्रौञ्च ! मदीयपूर्व-
पापस्वरूपः किमिहागतोऽसि ॥ 45

पुन सखीकृतशैत्योपचारः—

एवं हि मत्वा बहुचिन्तयन्तीं
तत्तापसंवर्धकमाज्यदीपम् ।

अपोह्य चेटीकृतरत्नदीप-
कान्त्या निशां च रहस्समनाम् ॥

चन्द्रोदयवर्णनम्—

तद्विष्णुना वै मथिताब्धिजाल-
तुषाररत्नैः प्रसृते समन्तात् ।
सुधां वहत्काञ्चनपात्रतुल्यं
अब्धेस्तदाऽभूत् दिवि चन्द्रबिम्बम् ॥

चन्द्राह्वयशिल्पी हरिनाभिजात-
ब्रह्माण्डगेहं च पुराणभूतम् ।
ज्योत्स्नासुधालेपनमाल्यहस्तैः
कृत्वा नवं तद्विदधाति किन्तु ! ॥

चन्द्रनिन्दा—

तमोमयं व्याप्य जगत् प्रवृद्ध-
भीत्याग्निसम्भूत सिताग्निरूप ! ।
मायाविना त्वं विजितो हि नैल्ये
सिन्धुं तथा मामिह बाधसे त्वम् ॥

पयोधिसम्भूतशशिन् न हि त्वं
क्रूरो नवा कोऽपि हतस्त्वयाऽत्र ।
श्रिया च लक्ष्म्या ह्यमृतेन साकं
जातस्य हिंसा मयि ते न युक्ता ॥

पुनः जानक्या विरहतापः—

आकाशसम्भूतनिशाकरस्य
करान्द्रयलोहेन हृतस्तनी सा ।
बहिर्गता हंसवधूसमाना
सा पुष्पतल्पे लुठति स्म सीता ॥ 51

चन्द्रस्य दीर्घैरथ रश्मिभिः सा
स्पृष्टा च दग्धा क्षपिता पपात ।
तदीयतल्पाम्बसरोजराशेः
सा मे हसाऽभूदमजस्रमार्ता तापम् ॥ 52

पुनः पुनश्चन्दनलिप्तगात्रा
ह्यस्ताऽपि तावत्स्वजनोपचारम् ।
रम्भास्तनी सा बहुतापमाप
किमौषधं मन्मथरोगशान्त्यै ॥ 53

पुनश्चेटीकृतशैत्योपचारः—

सीताशरीरोत्पितकामवह्नि-
दग्धेषु पुष्पैरपि पल्लवैश्च ।
कृतेषु तल्पेषु तदा चकार्षुः
सहस्रमेवं शयनानि चेट्यः ॥ 54

रामकथावर्णनम्ः—

हंसीव कन्यागृहपुष्पतल्पे
तस्थौ विषण्णा, तदिता समानम् ।
शरीरमस्या हि ददर्श योऽस्य
रामस्य गाथामथ वर्णयामः ॥

रामादयस्ते जनकं समीक्ष्य
प्रत्युद्गतास्तेन च भोगपूर्णम् ।
दिविस्पृशं देवपुरीसमानं
सौधं हि नीता न्यवसन् त्रयोऽपि ॥

श्रीरामपादाम्बुजयोगलब्ध-
स्वरूपवल्यास्तनयो मुनीन्द्रः ।
मूर्तीभवत्सर्वतपोमयोऽसौ
प्रापत् शतानन्दमुनिस्तदात्र ॥

प्राप्तं शतानन्दमुनिं स रामो
ननाम, वैदेहपुरोहितोऽपि ।
विधाय रामाय तदाऽऽशिषोऽग्रे
समागतं कौशिकमाप सद्यः ॥

तपस्विनं गाधिसुतं समीक्ष्य
"त्वया यदत्रागतमत्र तेन ।
भूम्याऽनया किन्तु तपश्च तप्तम्"-
इत्याह सूनुः किल गौतमस्य ॥

निहत्य रामः किल ताटकां ता-
मापूर्य यज्ञं जननीमहल्याम् ।
विमोच्य मे शोकहरो मुनीन्द्र !
शृणु त्वमित्याह स गाधिसूनुः ॥ 60

नीलाब्धिनीलोत्पलनीलरत्न-
मेघादिकान्त्युज्ज्वलदेहवन्तम् ।
दृष्ट्वा शतानन्दमुनिस्तु राम-
कथामवोचन्ननु कौशिकस्य ॥ 61

इत्थं पुराऽऽसीदय कौशिकेन
समः प्रसिद्धो न हि, तद्यथा च ।
श्रुत्वा ह्यसाध्यं युवयोः किमस्ती-
त्याहस्म तौ गौतमसूनुरेवः ॥ 62

एवं मुनौ शंसति गौतमस्य
सूनुं प्रणम्योत्थितवीरवर्यौ ।
तौ भ्रातरौ चाप्यनुगृह्य गेहं
ततः शतानन्दमुनिर्जगाम ॥ 63

स कौशिको लक्ष्मण इत्यमी ता-
वगच्छतां स्वीयमनोज्ञशय्याम् ।
ऐकान्त्य-सीता-शशि-रात्रियुक्तो
नीलः स रामोऽप्यभवद्विनिद्रः । 64

सीताविरहेण रामप्रलापः—

रम्याङ्गनाकारसमेतविद्यु-
त्स्वरूपमेकं भुवि किन्तु दृष्टम् ।
न स्यादिदं चेति न वच्मि किन्तु
पश्यामि रूपं हृदि चक्षुषोश्च ॥

सा निर्दया यद्यपि कामरोग-
निदानतद्वीक्षणवीक्षितोऽहम् ।
अस्यामहं प्रीतियुतश्च तस्मात्
सर्वत्र पश्यामि तदीयरूपम् ॥

तत्स्वर्णकुम्भप्रतिमस्तनाभ्या-
मालिङ्गन वक्षसि मे न चासीत् ।
रक्तोष्ठमन्दस्मितपूर्णमास्य
द्रष्टुं कदा स्यात् पुनरेव कालः ॥

मृत्योः स्त्रिया हन्त मया स्मृतायाः
क्रूरे च नेत्रे जघनं विशालम् ।
स्तनौ स्मित चेति भवन्ति नाना
मां हन्तुमेतानि कुतो बहूनि ॥

अपेक्षुधन्वा कमलानिमित्तं
प्रसूनबाणा-मयि त्वेव वृष्टा ।
मां चेत्स कुर्यादिह वीर्यहीनं
क ॥ वसेद्वीर्यमिदं नु पश्चात् ? ॥

हर्तुं जगत् प्रोत्थितदुग्धसिन्धु-
प्रवाहवद्व्याप्तकौमुदीयम् ।
मत्प्राणमाविश्य हिनस्ति तस्मात्
श्वेतं विषं चापि किमस्ति लोके ॥ 70

न वा कुमार्गे मम चित्तमेति
तथापि तां वाञ्छति मानसं मे ।
ततो ध्रुवं सा किल भूपकन्या
प्रसिद्धमेतत् न हि मे वितर्कः ॥ 71

रामे तथा कामवशेन खिन्ने
विकासयन् पद्मवधूमुखानि ।
उदेति भास्वानुदयाद्रिरूप-
महेशफालाक्षिभवाग्नितुल्यः ॥ 72

विहाय दुग्धाम्बुधिनागतल्प-
वियोगदुःखाब्धितले शयानः ।
स राघवः सूर्यकरावमृष्टः
पारं निशाब्धेरगमद्विनिद्रः ॥ 73

कृच्छ्रेण नीत्वा रजनीं प्रबुद्धः
समाप्य दैनन्दिनकर्मजालम् ।
नत्वा मुनिं लक्ष्मणसंयुतोऽसौ
विवेश तां मैथिलयज्ञशालाम् ॥ 74

दृष्ट्वा कुमारौ जनको मुनीन्द्रं
प्रणम्य कौ ताविति, पर्यपृच्छत् ।
द्रष्टुं मखं चापमिहागतौ ता-
वित्याह विप्रश्च तयोः प्रभावम् ॥

## 11

### कुलप्रभावकथनपटलः

(குலமுறை கிளத்து படலம்)

मनुः पृथुश्चः—

न वेत्ति को वा रविवंशपूर्व-
पुत्रं मनुं, किंच भुव स्ववाणैः ।
दुग्ध्वा क्षुधार्तान् सकलान् पृथुर्यो
ररक्ष राजा स च सूर्यवंश्यः ॥

इक्ष्वाकुः—

स्तुत्वा विधिं भोगिशयं रमेशं
स्वीकृत्य तदङ्गविमानयुक्तम् ।
इक्ष्वाकुराजो भुवमानयद्यो
तं ये न जानन्ति जडाः स्युरेते ॥

ककुत्स्थः—

"हत्वाऽसुरान् तैर्हृतदेवलोकं
विमोच्य देही"ति सुरेशपृष्टः ।
चक्रे तथा तत्कुलभूः ककुत्स्थ-
आरुह्य शक्रं वृषभस्वरूपम् ॥

शिबिः—

जन्तून् समान् आत्मसमान् अरक्ष-
न्नेतत्कुलीनास्त्विति यान् वदामः ।
स्वप्राणदानेन विहङ्गरक्षां
कुर्वन् शिबिश्चान्यतमो हि तेषु ॥ 4

भगीरथ —

सहस्रवक्त्रोऽपि यशांस्यमीषां
न शक्नुमीशो वदितुं, किं मयाऽत्र ।
प्रसूनशुभ्रशिरःस्रगङ्गां
गामानयद्यः स च सूर्यवंश्यः ॥ 5

रघुः—

यश्चन्द्रजेता ननु रुद्रजेता
यो दुग्धदुग्धा बहुभिर्नृपैस्तैः ।
विख्यातवंशो रघुरेष जातः
शक्रं दिशोऽप्यष्ट जिगाय सोऽयम् ॥ 6

दशरथ, तत्पुत्रौ च —

अजस्य सूनुं भुवि को न वेत्ति
तदस्य सून्वोरनयोर्महत्त्वम् ।
वक्तुं न शक्तश्चतुराननोऽपि
राजन् यथाशक्ति तदत्र वक्ष्ये ॥ 7

रामाङ्घ्रिधूल्यैव महर्षिपत्नी
भेजे निजं रूपमिदन्तु दृष्टम् ।
प्राणादपि प्रीतियुतोऽहमस्मिन्
एषा कथाऽस्येत्यवदन्मुनीन्द्रः ॥

## 12

### धनुर्भङ्गपटलः

(கார்முகப்படலம்)

"वक्ष्यामि किं ते धनुषोऽस्य विप्र!
भग्नं मनो मे, यदि सज्यमेतत् ।
कुर्यात्स रामो मम शोकहानिः
सीताऽपि धन्ये"ति नृपो जगाद ॥

"आनीयतां शैलसमं धनुस्त-
द्वे"ति भूपालवदन्महीशः ।
चत्वार एवात्र नता महीशं
जवेन जग्मुर्धनुरास्ति यत्र ॥

ते पर्वताभा गजतुल्यकायाः
षष्टिः सहस्राण्यथ वीरवर्याः ।
स्तम्भान् दृढं मध्यतलेषु धनुः
ते दण्डमुद्धृत्य धनुरानयन्ति ॥

धनुर्दृष्ट्वा नानापौरवचनानि—

"सशङ्खचक्रो हरिरेव सज्य
धनुर्न कुर्याद्यदि कोऽत्र चान्यः ।
आगत्य विष्णुर्यदि भञ्जयेत्तत्
सीताविवाहो भ्रम"मित्यथोचन् ॥ 4

"हिमाद्रिमादाय कृतं किमेतत्
किमाद्रिशेषः किमु मन्दराद्रिः ।
किमिन्द्रचापः पतितः पृथिव्याम्"
इतीव पौरा बहुधा वदन्ति ॥ 5

"राजाऽऽह, कस्मादनुरागये"ति
"न सन्ति मूढा जनकेन तुल्याः" ।
"फलेदपीदं किल पूर्वपुण्यात्"
"किं सा धनुर्दृष्टवती" त्यवोचन् ॥ 6

"तद्बाणलक्ष्यं भुवने किमस्ति ?
"कन्यार्थमेतन्निहितं नु राज्ञा" ।
"चक्री ■ रामः किमु भञ्जयेत्तत् ?"
"तत्पापकर्मे"ति वदन्ति नाना ॥ 7

शतानन्देन सीताधनुषोश्चरित्रकथनम् —

रामस्य कान्तिं गजवत्स्थितस्य
चापं च दुर्धर्षमवेक्ष्य, राज्ञः ।
सीताकृते जातमनोव्यथां तां
ज्ञात्वा शतानन्दमुनिर्जगाद ॥ 8

"धनुःप्रभावो न मयाऽत्र वाच्य-
स्त्वं वेत्सि नान्योऽस्ति महेशतुल्य ! ।
रथाङ्गपृष्ठा जनकस्य पुत्री
या वृत्तमस्याः शृणु कौशिक त्वम्" ॥

कथं वदेयं गुणजालमस्याः
गुणाः स्वयं जीवितुमापुरेनाम् ।
सौन्दर्यमेनामभजत् सुतत्वा
लावण्यहीनास्त्वनयाऽन्यनार्यः ॥

एतावता केऽपि न चापमापु
पलाय्य लीना न नृपा निवृत्ताः ।
न स्याद्विवाहो ध्रुवमित्यमंसि
स नामयेऽथ्रुवितानविवाह ॥

होमाग्न्यसिक्तस्थलजातवह्नि-
समो हि रामोऽप्युदतिष्ठदत्र ।
"नष्टं धनुश्चेति सुरा विनेदु-
राशीष्यकुर्वन् मुनयोऽपि रामे ॥

महर्षिणा शुद्धतपोविधात्रा
रामो नियुक्तो न धनुर्नभङ्क्ष ।
कामस्तु पूर्वं हृदये वधूनां
बभञ्ज बाणैर्धनुषां सहस्रम् ॥

रामं दृष्ट्वा पौरस्त्रीवचनानि:—

"संयोज्य हस्तौ गजतुल्यरामो
  नारोपयेच्चेद्धनुरेष बाणैः ।
सीता सुकेशी च वयं च सर्वाः
  पतेम वह्ना''विति काश्चिदाहुः ॥ 14

"श्रद्धा विवाहे नृपतेर्यदि स्यात्
  'गृहाण सीतामि'ति चोक्तवान् स्यात् ।
कुतो न्वधात् शैवधनुस्तदग्रे
  मूढो नृपोऽसा''विति चाहुरन्याः ॥ 15

"लज्जा न सर्वज्ञमुनेरपी"ति
  "भूपादपि क्रूरजनो न चे"ति ।
ऊचुः, "स रामो न हि भञ्जयेच्चेत्
  पीनस्तनी सा भविता सुभाग्या" ॥ 16

वधूभिरित्थं कथिते, महर्षि-
  सङ्घेषु देवेष्वपि हृष्टवत्सु ।
क्रीडायुतान् वारणमेरुमुख्यान्
  कुर्वन् स्वगत्या प्रययौ स रामः ॥ 17

निमेषशून्याः सभिकाः पदाभ्यां
  चापावमर्दं शरबन्धनं च ।
वेगाददृष्ट्वा, धनुष. करेण
  स्पर्शं त्वपश्यन् ध्वनिमप्यशृण्वन् ॥ 18

रामं दृष्ट्वा पुरजनवाक्यम् :—

"स राजपुत्रो", "हरिरब्जनेत्र."
"स नीलमेघ", "स तु पुष्पकान्ति." ।
"क्षीराब्धिवासी हरिरेष", "मर्त्यो
न चे"ति पौरा बहुधाऽनुवंस्ते ॥

सीतापि रामं स च जानकीं तां
द्रष्टुं सहस्रं नयनानि नालम् ।
"तथाऽनुज पश्यत", "योगिनं ता-
वानीतवन्त नमते" त्यवोचन् ॥

जानक्याः स्फटिकगृहप्रवेशः—

अन्यां दशां प्राप्य विसृज्य तल्पं
सखीवृता पद्मतटाकतीरे ।
सा स्फाटिके सद्मनि चन्द्रकान्त-
जलार्द्रपद्मं शयनं विवेश ॥

सीताविरहप्रलापः—

सज्जे धनुष्पाणिकरौ तदीयौ
सबाणतूणीरयुतौ तथांसौ ।
पुष्पाढ्यवक्षश्च यदीह दृष्टं
स्याज्जीवितं मे पुनरेव दृष्टम् ॥

आकाशचन्द्रेण सपुष्पकैरैः
चापेन युक्तो जलदः स्वदृग्भ्याम् ।
पीत्वा मम प्राणजलं मदीय-
चित्ते वसत्यद्य सदा वसेच ॥ 23

कामः कठोरः कठिनान् स्वबाणान्
मयि प्रयुङ्क्ते, कलुषां ततो माम् ।
"मा ते भयं स्यादि" ति वाक्यमुक्त्वा
ह्यरक्षतस्तस्य कुतो हि पुंस्त्वम् ॥ 24

"भो भोः स्तनौ ! किन्तु फल प्रवृद्धया
दुर्भेदचाप धृतवान् दयालुः ।
चन्द्राननो यो भुवि तस्य वक्षः-
संश्लेषपीडाय तपो विधत्तम्" ॥ 25

इत्थमुख-मदनो हृदिस्थः
तच्चित्तरोगोऽत्यकुचद्वये मे ।
विधेन सिक्तोऽपि नैव पूर्व-
चन्द्रः कलङ्को हि न तस्य मध्ये ॥ 26

कामप्रयुक्तास्त्रविषाक्तमग्न-
देहाद्दग्धा बाहिरगता मे ।
प्राणास्तु तद्राघवपादमाप्य
गता निवृत्ताः कथमत्र चित्त ! ॥ 27

विद्युद्युतो मेघ इवावतीर्य
गा प्राप्य यातो धृतयज्ञसूत्रः ।
न वेद्मि कोऽसाविति तं हृदिस्थं
अग्रे स्थितं तं च कुतो न जाने ॥

भूत्वा पयोऽम्धावमृतं च लब्ध्वा
त्यजेद्यथा हेमघटेन मूढः ।
रामाङ्गसंश्लेषसुखं तथैव
विहाय लब्धं मम किं प्रलापैः ॥

नलिमालाख्यचेट्याः सीतान्तिकागमनम् :—

वियद्धनुस्तुल्यविचित्ररूप-
समुज्ज्वलत्कुण्डलहारयुक्ता ।
चेटी गलत्कुन्तलबन्धयुक्ता
सा नीलमाला द्रुतमाजगाम ॥

चेट्या धनुर्भङ्गवृत्तान्तकथनम् —

"स सालवृक्षोन्नतपाणियुक्तो
दासो हरिस्त्यक्तभुजङ्गतल्प" ।
इत्येवमुक्तो मुनिनाऽनुजेन
सार्धं पुरीं प्राप स रामनामा ॥

धनुस्त्ववष्टभ्य पदा क्षणेन
जग्राह तच्छिक्षितयन्त्रतुल्यम् ।
प्रसूनवर्षे सति भग्नमेतत्
पपात, सा राजसभा चचाल ॥

सीताया सन्देहनिवृत्ति —

"स मेघरूपो मुनिना जगाम
स पद्मनेत्रस्त्वि"ति चेटिवाक्यैः ।
सीता, "प्रियोऽसावि"ति निश्चिकाय
भग्नाथ काञ्ची ववृधे नितम्बम् ॥ 33

हर्षोत्पुन पुष्टुमध्यमा सा
प्रवृद्धवक्षोजयुता प्रहृष्टा ।
"तत्कारणैरेव स एव नो चेद्
ध्रुवं मृता स्या"मिति मन्यते स्म ॥ 34

जनकवाक्यम् :—

स्वामिन्! त्वया प्राप्तवतोऽस्य सद्य
कार्यो विवाहः किमथो नरेन्द्रम् ।
सर्वे यथानाय्य ततः किमस्य
कार्यो वद त्वं त्विति भूप आह ॥ 35

जनकेन दशरथाय दूतप्रेषणम् —

अथैवमुक्ते जनकेन, योगी
"शीघ्रं नृपस्थानयनं वरं स्याद्" ।
इत्याह, नृपः सकलं च दूतै
र्न्यवेदयन्मैथिल एव राज्ञे ॥ 36

## 13

### दशरथप्रस्थानपटलः
### (எழுச்சிப் படலம்)

**जनकदूतागमनम्ः—**

भेरीरवाढ्यां गमिता अयोध्यां
सद्ये नृपं द्रष्टुमपारयन्तः ।
अनेकभूपाळकिरीटशोभि-
पुरीमुखे तस्थुरिमे हि दूताः ॥

**सन्देशपठनम्ः—**

दूता इमे, "ख्यातगुणिन् नरेन्द्र !
गृहाण पत्रं त्विदमि"त्ययच्छन् ।
जग्राह तद्राजसभास्थविद्वान्
पपाठ राज्ञश्च निदेशवश्यः ॥

**धनुर्भङ्गश्रवणम्ः—**

"पुरा कपर्दी धनुषैव येन
जिगाय लोकानथ दक्षयज्ञे ।
तच्चापभङ्गध्वनिरेव पूर्वं
मया श्रुतः किन्वि"ति भूप आह ॥

दशरथाऽऽदेशः—

"यत्रास्ति रामो रघुवंशराज-
पुण्यैकजातो मदनेन तुल्यः ।
सैन्यं नृपास्तां मिथिलां प्रयातु
तदुद्घुष्यतामि"त्यवदन्नृपेन्द्रः ॥ 4

दशरथसेनाप्रस्थानम्:—

नृपस्य गम्भीरगतेस्तु सेना
व्याप्ताऽभवत्सर्वत एव लोके ।
वातेन सिन्धुः सकलं विनाश्य
व्याप्नोति यद्वत्प्रलये प्रवृद्धः ॥ 5

रघूद्वहः सर्वजनार्तिहन्ता
नैव प्रतस्थे, प्रथमं ततोऽपि ।
उपाय मध्ये प्रसृतस्तदीय-
सेनाग्रभागो मिथिलां जगाम ॥ 6

विप्राः—

गजैर्वधूभिश्च समं प्रयातुं
भीता युतास्तत्रकमण्डलुभ्याम्
जपादि कर्मार्हकरानपोचैः
कृत्वा पदाग्रैः प्रययुर्द्विजेन्द्राः ॥ 7

वसिष्ठः—

बहुश्रुतैः यागपरैश्च विप्रैः
समेत्य मुक्ताशिबिकां प्रविष्टः ।
अरुन्धतीनायक एष याती
हंसं समारुह्य यथा विरिञ्चिः ॥

भरतशत्रुघ्नौ—

गजैस्तुरङ्गैः परितो वृतौ तौ
शैलं यथा सिन्धुरिमौ कुमारौ ।
तथाऽनुयातौ तमृषिं वसिष्ठ
तौ भ्रातरौ गाधिसुतं यथैव ॥

दशरथः—

तन्नित्यकर्माणि विधाय विष्णुं
प्रणम्य गोभूमिसुवर्णमुख्यान् ।
दत्वा द्विजेभ्यो मुदितः किरीटी
शुभे मुहूर्ते नृपतिः प्रतस्थे ॥

चन्द्रशैलप्राप्तिः—

क्रोशद्वयं प्राप्य रघुप्रवीरः
तं चन्द्रशैलस्य तटं विवेश ।
नारीसुकेशास्तनसक्तपुष्प-
सुगन्धिसैन्यं न्यवसत्तटेऽस्मिन् ॥

गजाः—

धिक्कृत्य नेतुर्हितसूक्तिमेव
ह्रदाद्गजा नैव बहिः प्रयान्ति ।
कामी सुहृद्बानिवचो विहाय
मग्नो यथा पण्यवधूनितम्बे ॥

चन्द्रशैलवर्णनम्—

शैलेन रुद्धस्तटमाप चन्द्रः
तत्रत्यनार्यः शशिदर्पणेऽस्मिन् ।
एकत्र पश्यन्ति निजाङ्गशोभां
स्वर्गात्तथाऽन्यत्र सुरस्त्रियोऽपि ॥

विहृत्य देवैः प्रणयोत्थकोपात्
देवाङ्गनामुक्तसुरत्नमालाः ।
शैले गृहीत्वा कपयः स्वभार्या-
कण्ठे निबध्नन्ति, नदन्ति भार्याः ॥

शैलेऽत्र गङ्गासदृशाः सुवर्ण-
मुक्तासमृद्धाः किल निर्झरास्ते ।
त्रिविक्रमस्योरसि धारणार्ह-
श्वेतोत्तरीयैः सदृशा बभूवुः ॥

शैलाग्रभागे विलसन्ति मेघाः
प्रसूनमालास्तदधः प्रदेशे ।
रमापतिर्नीलवपुः किमेष
ह्सेरमूढः प्रतिभाति शैलः ॥

**सायंकालशोभा—**

मेघावृतास्ताचलरूपनागं
विवेश वेगाद्रविरूपसिंहः ।
तेनोद्गताद्रक्तमयप्रवाहात्
बभूव रक्तं गगनं च सायम् ॥ 9

**शैलमहिमा—**

अनन्तशीर्षैः रमणीयदृश्यै
सचन्दनैर्मण्डित एव शैलः
सुचन्दनं वक्षसि बिभ्रतोऽस्य
नीलस्य विष्णोरभजत् स साम्यम् ॥ 10

**शैले सेनानिवासः—**

प्रेम्णा मिथः स्त्रीपुरुषाः समस्ताः
नरास्तथा सिंहकुरङ्गनागाः ।
आगत्य तस्थुर्गिरिसानुभागे
रम्यं ध्वनद्भिर्जनैरुपेते ॥ 11

**अन्धकारव्याप्तिः—**

अस्ताद्रिमारुह्य निलीयमाने
क्रूराक्षियुक्ते रविरूपसिंहे ।
महान्धकारः प्रसृतः समन्तात्
लीना गजा यान्ति बहिर्यथैव ॥ 12

दीपारोपणम्—

मन्दारमालोज्ज्वलितस्य राज्ञः
सेनासमुद्रे बहुघोषयुक्ते ।
आरोपिता दीपगणा विभान्ति
पयोधिसम्भूतसरोजतुल्याः ॥

चन्द्रोदयः—

मुक्तासमूहे सितसैकतस्थे
भूत्वा चरच्छ्वेतसुशङ्खतुल्यः ।
उत्थाय सिन्धोरुडुभिः समेत्य
विभाति चन्द्रो गगने विशुद्धः ॥

निशानयनम्—

मुक्त्वा समक्षं रतिशास्त्रसारं
कृत्वा वधूवाञ्छितमेव सर्वम् ।
नाट्यं च सङ्गीतयुतं समीक्ष्य
निन्युर्निशां सैन्यगता नरास्ते ॥

15

पुष्पापचयपटलः
(பூக்கொய் படலம்)

सूर्योदयः—

तमो हिरण्यं द्युदुरूपदंष्ट्रा-
युतं निहन्तुं किरणाख्यहस्तैः ।
युतो रविः पश्चिमशैलरूप-
स्तम्भादुदेति स्म यथा नृसिंहः ॥

ससैन्यस्य दशरथस्य शोणानदीप्राप्ति —

रथाधिरूढः कृतनित्यकर्मा
जगाम राजा, नृपवाहिनी च ।
शोणानदीं प्राप सरोजयुक्तां
वनैः समन्तादुपशोभितां च ॥ 2

तेषामुपवने वास.—

तदा रवावम्बरमध्यप्राप्ते
वधूयुता राजसुतास्तदन्ये ।
पुष्पापचित्या सलिले विहार-
योग्यं नदीजुपवनं प्रयाताः ॥ 3

स्त्रीणां मधुरालापा.—

सुभाषितानां मधुरस्वनानां
सुकुन्तलानां वचनं वधूनाम् ।
श्रुत्वा न कूजन्ति पिका ह्रियेव
किं रम्यवाचा पुरतोऽन्यवाक्यै. ॥ 4

स्त्रीणां पुष्पापचयः—

सुधासन्लेखयुताङ्गनाभिः
स्पृष्टास्तु शाखाः स्वयमेव नम्राः ।
वर्षन्ति चेत्पादतलेषु पुष्पं
को वा विशेषो नमने नराणाम् ॥ 5

रमासमक्षीकरपद्मयोगात्
　सिंहातिशाय्युत्तमवीर्यभाजाम् ।
नृणां नमेतां यदि शैलहस्तौ
　कः पुष्पशाखानमने विशेषः ॥

भ्रमरभ्रमणम्—

नदीलटाकेषु न भूतपूर्वं
　नारीललोचन्मुखरूपपद्मम् ।
भृङ्गाश्चरन्तो न हि तत् त्यजन्ति
　दृष्ट्वा नवं वस्तु परित्यजेत् कः ॥

एका युवती—

युवा तरौ प्रेक्ष्य तु "नारिकेल
　फलान्यहो श्रीकुचवद् विभान्ति" ।
इत्याह, "कां वा हृदि मन्यतेऽसौ"
　इतीरयित्वा रुदति स्म भार्या ॥

अपरा युवती—

पत्न्याः पुरः स्त्र्यन्तरनाम मोहात्
　जगाद भर्ता, कुपिता नताङ्गी ।
सा पुष्पमाघ्रातवती रुदन्ती
　दग्धं प्रसूनं श्वसनैस्तदीयैः ॥

नारीसौन्दर्यम्—

"महर्षयो योगरता मनोज-
बाणैर्हता न स्युरितीयमुक्तिः" ।
दृष्टैव, पुष्पापचयोद्यताना
स्त्रीणां भ्रुवो हन्तुमिमान् समर्थाः ॥ 10

एको युवा—

देवैरलेख्याद्भुतमूर्तिमस्याः
समीक्ष्य शोभां हृतचित्तदृष्टिः ।
आरुह्य शाखां मुकुलानि पुष्प-
गुच्छयाऽपचित्य प्रददाति कश्चित् ॥ 11

जलक्रीडागमनम्—

सुच्छायया शीततमे वनेऽस्मिन्
पुष्पापचित्यां सकला विरक्ताः ।
शुद्धे जले श्वेततरङ्गपूर्णे
विहर्तुकामाः प्रययुर्ह्रदादीन् ॥ 12

## 16

## जलक्रीडापटलः

(புனல்விளையாட்டுப்படலம்)

जलाशयगमनम्—

स्वकीयशोभाजितदेववृन्दाः
नार्यो नराः पुष्पयुतादरण्यात् ।
उत्थाय गच्छन्ति नदीह्रदादीन्
यथा गजा यान्ति वने समर्थाः ॥ 1

सलिलमज्जनदृश्यम्—

दुर्वाससः शापत इन्द्रभाग्यं
पुरा पयोधावमराङ्गनाभिः ।
मग्नं यदासीत् सममास तेन
जलाशये मज्जवता समूहः ॥

एका—

काचिन्मनोज्ञा धृतपुष्पकेशा
दृष्ट्वा स्वबिम्बं सलिले सखीं ताम् ।
मत्वा भ्रमात्स्वेन समं हसन्तीं
तस्यै ददौ सा स्तनलग्नहारम् ॥

अपरा—

सुमेखला मध्यतलात् च्युतास्ताः
जलावगाहे पतिता ह्रदेषु ।
पदावगृह्णन्, "किमु पादलग्न-
सर्पोऽय"मित्थं भयमाप काचित् ॥

मत्स्याः—

मत्स्याः सफरत्वरितमधुप्रवाह
गन्ध जले क्षीवपुषो वहन्ति ।
सङ्गात् सतां ज्ञानयुता नराः स्यु-
रित्यत्र किं वाऽन्यनिदर्शनेन ॥

जलाशयः—

स्नाताङ्गनादेहसुकुङ्कुमेन
नृपाङ्गसम्बद्धसुचन्दनेन ।
युक्तं ह्रदस्य सलिलं च नील
घनाभ्यरक्ताम्बरतुल्यमासीत् ॥ 6

सूर्यास्तमयः—

कुरङ्गनेत्राः पुरुषैः समेताः
यच्चक्रुरेताः सलिलावगाहम्
समीक्ष्य तत्कर्तुमनाः स्वयं च
किं पश्चिमाब्धिं तपनो विवेश ? ॥ 7

चन्द्रोदयः—

पूर्वं नृपः क्षीणबलो जितोऽपि
यथा पुनर्योद्धुमुपैति मोहात् ।
जितस्तु नारीवदनैः प्रयातः
शशी पुनर्योद्धुमुपैति तद्वत् ॥ 8

## 17

## मद्यपानपटलः
(உண்டாடுபடலம்)

चन्द्रिका—

सुराप्रवाहो धवलः किमेष ?
किं मूर्तिमज्ज्ञानरसप्रवाहः ! ।
अन्तःस्थकामस्तन बहि-
र्वेत्यूत्थाऽमब्याप्तकौमुदीयम् ॥ 1

नानागृहाणि—

छायातलं मौक्तिकमण्डपस्य
चरत्पयोदावृतकाननं च ।
स्थलं विशुद्धस्फटिकैर्निबद्धं
प्रसूनगेहं विविशू रमण्यः ॥

सुरया कामवर्धनम्—

पुष्पागरूत्पाकचभारयुक्त-
स्त्रीभिः सुपीता मदिराऽथ तासु ।
अन्तःस्थ कामाग्निमवर्धयत्सा
हुतं घृतं वर्धयते यथाऽग्निम् ॥

चित्तभ्रमः—

सन्दिग्धमध्या स्वमुखं सुरायां
दृष्ट्वाऽन्यनारीति विभाव्य काचित् ।
"उच्छिष्टमद्यं पिबसीह कस्मात्
पिबेऽन्यदस्तीति" जहास तत्र ॥

चन्द्राय अभयप्रदानम्—

सुरास्यचन्द्रप्रतिबिम्बदृष्ट्या
काचित्प्रमत्ता, "ननु चन्द्र! राहोः ।
भीत्या निलीनोऽत्र भवान् भयं ते
माभूत्" इतीत्थं तमुपादिशत् सा ॥

चन्द्रिकायां मदिरात्वभ्रमः—

प्रसूनगेहस्थितरत्नमार्गात्
ज्योत्स्नां पतन्तीं भुवने स्म काचित् ।
गृह्णाति पात्रे, मदिरेति मत्वा
नारीस्वभावादुत चित्तमोहात् ॥ 6

मद्यपानवैचित्र्यम्—

स्वपाणिकम्पात् मधु यच्च तल्पे
पपात तत् पानमदेन काचित् ।
निरीक्ष्य, "तिष्ठन्मधु" चेति मत्वा
सा रिक्तपात्रं कुरुते निजोष्ठे ॥ 7

कपटनिद्रा—

एका ययौ रन्तुमनाः प्रसून-
तल्पं, न तद् ज्ञातमभूत् प्रियस्य ।
आलस्यमोक्षच्छलतो लुठन्ती
"कष्टा किमासीत्" इति सा जगाद ॥ 8

दूतसन्देहः—

सशङ्खपाणेर्नृपतेः समीपं
केऽस्यागता काचिदगात् जवेन ।
कामेन शम्पा सुरथो नु केन
दूतेन नीतेदमिदं न जाने ॥ 9

प्रियापादताडनम्—

काचित्पदा भर्तुरुरो जघान
केल्यां, कराभ्यां च जुगोप वक्षः ।
"प्राणप्रियां चित्तगतां रिरक्षुः
रुणत्सि किं वे"ति जगाद साऽपि ॥

स्वप्नाभिनयः—

असत्यनिद्रावशमेत्य काचित्
स्वप्नच्छलात् सा पतिमालिलिङ्ग ।
यथा तुषारं शमयेद्विवस्वान्
कामो वियोगं शमयेत्तथैव ॥

चन्द्रसूर्यौ—

कृताल्पपुण्यैरिव लब्धभाग्यं
तदा शशी प्राप लयं क्षणेन ।
तद्विष्णुवक्षःस्थितकौस्तुभेन
समः पयोधौ रविरात्रिरासीत् ॥

18

प्रत्युद्गमपटलः

(எதிர்கொள் படலம்)

दशरथस्य गङ्गातीरप्राप्तिः—

गजाश्वसैन्योत्थितदानवारि-
सम्पूर्णनद्यः प्रवहन्ति यस्मिन् ।
सैन्याब्धिना तेन युतो जगाम
गङ्गातटं राघवसिंह एव ॥

जनकेन प्रत्युद्गमः—

श्रुत्वा नृपस्याऽऽगमनं प्रहृष्टः
रथाश्वमातङ्गमयाब्धिजुष्टः ।
प्रत्युद्गमार्थं जनकः प्रयास्यन्
ययौ यथा सूर्यमुपैति चन्द्रः ॥ 2

सेनारेणु —

त्रिविक्रमः सप्त यथोर्ध्वलोकान्
भित्वा पुरा मातुमगात् प्रपञ्चम् ।
सैन्योत्थितो रेणुरिमं च मार्गं
प्रविश्य गत्वा प्रसृतो जगत्याम् ॥ 3

सेनयोरुभयोर्मेलनम्—

यदा त्वयोध्यापतिसैन्यराशि-
माविश्य युक्ता जनकस्य सेना ।
तदा पयोधिं प्रविशन्नदीना
शब्देन तुल्यो ध्वनिराविरासीत् ॥ 4

चक्रवर्तिनोरन्योन्यालिङ्गनम्—

ततोऽवतीर्य स्वरथाच्चदग्रे
स्थितः, "त्वमारोह रथं ममे"ति ।
उक्तो महीशेन तमारुरोह
स मैथिलस्तं नृप आलिलिङ्ग ॥ 5

दशरथेन कुशलप्रश्नः—

व्याघ्रेण सम्मानितसिंहतुल्यो
वैदेहमाश्लिष्य सबन्धुमित्रम् ।
क्रमेण पृष्ट्वा कुशलं, "त्वमग्रे
याहीं" त्यवोचत्, नृपतिर्ययौ च ॥

मिथिलातो रामप्रस्थानम्—

सुरैर्नरैर्नागवरैश्च वन्द्यो
रामोऽश्वयोधैः सहितो नगर्याः ।
प्रस्थाय, नानामणिबद्धहेम-
रथेन यातः सह लक्ष्मणेन ॥

मृतस्य पुनरुज्जीवनम्—

नीलोत्पलाभः सुरवन्द्यपादः
चित्रातिशाय्युत्तमरूपयुक्तः ।
रामो नृपं प्राप यथैव याताः
प्राणाः पुनः प्राप्य विशन्ति देहम् ॥

रामेण मातृवन्दनम्—

कपर्दिपाणिस्थितचापभेत्ता
रामः स्वमातृः क्रमशः प्रणम्य ।
उत्थाय तस्थौ तमवेक्ष्य तासां
हर्षं तदा को गदितुं समर्थः ? ॥

रामाय पितुरादेशः—

"एतैरनीकैः सहितस्त्वमग्रे
याहि" अयोध्यापतिराह रामम् ।
समस्तजन्तोरपि मातृकल्पः
शास्ता जनानां भुवि साक्षिभूतः ॥ 10

रामस्य मिथिलागमनम्—

रथाधिरूढैरनुजैः प्रहृष्टैः
पार्श्वद्वये तैर्विनतैः समेतः ।
सशङ्खभेरीध्वनिभिः स रामः
ययौ समुत्थाय रथाधिरूढः ॥ 11

तस्य नगरवीथीप्रवेशः—

नारीषु गेहाद्बहिरेत्य तत्र
स्थितासु तद्वीक्षणपुष्पवृष्ट्या ।
सिक्तः स रामः स्वपदेन गच्छन्
अवाप वीथीं मिथिलानगर्याः ॥ 12

पुराङ्गनानां चित्तस्थितिः—

आये हरावन्तिकमागते
बाला युवत्यः सकलाश्च वीथ्याम् ।
अनङ्गबाणप्रहिताः समेत्य
प्रापुर्दशां यामथ तां वदाम ॥ 13

## १७

## पुरविहारपटलः

(உலாவியற் படலம்)

स्त्रीणां रामान्तिकागमनम्—

मयूरसारङ्ग समानगत्यः
नक्षत्रविद्युत्समकान्तिमत्यः ।
भूषारवैर्भृङ्गरवैरुपेताः
नार्यो जवाद् रामसमीपमापुः ॥

तासां स्थितिः—

"दृष्टं प्रियं मूर्तिमदेव तस्मात्
जन्माभवत् सार्थकमि"त्युदीर्य ।
यथा जलं वीक्ष्य विपत्प्रदेशे
मृगास्तु धावन्ति तथा स्त्रियोऽपि ॥

जवेन रामं गतमात्मचित्तं
गृहीतुकामाः प्रययू रमण्यः ।
ताः खिन्नमध्याः प्रचलत्प्रसूनाः
निम्नप्रदेशप्रवहत्पयोवत् ॥

कार्ष्ण्यकारणम्—

श्रीरामदेहस्थितकार्ष्ण्ययोगात्
नेत्राणि कृष्णान्यभवन् किमासाम् ।
स्त्रीरत्ननेत्रैः किमु वीक्षितोऽसौ
रामोऽभवन्नीलतनुर्न जाने ॥

मदनोपालम्भः—

कामप्रयुक्तानिह पुष्पबाणान्
समीक्ष्य काचित् सुमुखी बभाषे ।
"रामस्य वीर्यं पितुरस्य चाज्ञा
धिक्कृत्य कोऽसावबलानिहन्ता ?" ॥ 5

राममोहितानां स्त्रीणां वचनानि—

वोढुं ह्यशक्ता निजदेहभारं
वल्मीकभूपोज्झितसर्वभूषा ।
अवाप्यसर्वोत्तमकामसौख्य-
रूपेण काचित् प्रतिमेव तस्थौ ॥ 6

एका—

मन्नेत्रमार्गात् कपटी स रामो
विवेश चित्तं नयने पिधाय ।
अन्तः स बद्धः सखि ! तेन रन्तुं
गच्छेम शय्यामिति काचिदाह ॥ 7

अपरा—

विस्रस्तभूषावसना हि काचित्
कामास्त्रघातं त्वविचार्य गात्रे ।
पश्यन्ति या राममिहादरेण
कोपादियं पश्यति तास्तु सर्वाः ॥ 8

रामस्य सर्वाङ्गसौन्दर्यम्—

याः स्कन्धमैक्षन्त न ताभिरन्यत्,
दृष्टं करौ पादतलौ च तद्वत्।
सर्वाङ्गशोभा न हि काऽप्यपश्यत्,
एको यथा सर्वमतस्थमीशम् ॥

परब्रह्मणो नारीहृदयवासः—

एका सुकेशी तनुमध्यमा तां
पातुं स रामो हृदयं विवेश।
जगत् समस्तं जठरे कदाचित्
धृताच्च रामाद् भुवि कोऽस्ति वन्द्यः ! ॥

राजमार्गे रामं दृष्ट्वा नारीवचनानि—

स्त्रियाः कृते पावनराम! धीर!
रौद्रं धनुः पूर्वमभञ्जयस्त्वम्।
कामेक्षुचापं त्वमिहाद्य भङ्क्त्वा
गृहाण मामित्यथ काचिदाह ॥

दिव्यमङ्गलविग्रहदर्शनम्—

एका सुतप्ता श्लथिता रुदन्ती
सुदीर्घमुच्छ्वस्य सखीमवेक्ष्य।
सम्योज्य हस्तौ, "सखि! रामबिम्बं
कामो लिखेत् किन्न्वि"ति पर्यपृच्छत् ॥

परतत्त्वनिर्णयः—

एतादृशान्युत्तमलक्षणानि
नरेषु न स्युः सुविमृश्यमाने ।
अतः स विष्णुर्भवतो वदामि
ज्ञायेत पश्चादिति काचिदूचे ॥ 13

रहस्यार्थगोपनम्—

वर्षामयूरीसदृशी यदेका
स्वकीयकामं हृदि गोप्तुमैच्छत् ।
कामस्य तद् ज्ञातमभूद्रहस्यं
मुखं मनोज्ञम् हि गोपनार्हम् ॥ 14

परस्त्रीपराङ्मुखता—

"ताः खिन्नगात्रा व्यथिताः सशोकाः
स्त्रियः स्वदारान्या न ददर्श शुद्धः ।
सस्मार नार्यं मनसाऽप्यतोऽसौ
किं स्नेहशून्यस्त्वि"ति काचिदाह ॥ 15

रामनिन्दापरा काचित्—

मुग्धासु नारीषु किमप्यलब्ध्वा
गच्छन् स रामः करुणाविहीनः ।
ज्ञानी न चायं वृणुते हि सीता
स घातकः स्यादिति काचिदूचे ॥ 16

निर्लज्जा काचित्—

एका परां प्रेक्ष्य तु काममोहात्
"किं राममूर्तेर्निकटे मनो मे ।
दृष्टं त्वया ब्रूहि तदि"त्यपृच्छत्
आशायुतानां न भवेद्धि लज्जा ॥

प्राणं प्रार्थयाना अपरा—

"स्वप्राणदानेन परानरक्षन्
तद्वंशजाताः परमेष रामः ।
प्राणान् मदीयान्न हि नः प्रयच्छेत्
क्रौर्यं कुतोऽस्ये"ति जगाद काचित् ॥

रामस्य सभामण्डपप्रवेशः—

वधूभिरित्थं कथितः समन्तात्
भेजे नृपेन्द्रैः सहितः स रामः ।
वेदान्तवेत्रा कुशिकात्मजेन
तथा वसिष्ठेन युतां सभां ताम् ॥

तस्य आसने उपवेशः—

साकेतजन्मा मुनि धर्मवृद्धौ
नत्वा मुनी, प्राप्य तयोरनुज्ञाम् ।
छायासमैर्भ्रातृभिरेव गुप्तो
वरासनं प्राप्य रराज रामः ॥

दशरथस्य मण्डपागमनम्—

साकेतराजो निजबन्धुमित्रैः
समेत्य यातो मणिमण्डपं तम् ।
नक्षत्रवृन्दैरनुगम्यमानः
प्राप्नोति चन्द्रो गगनं यथैव ॥ 21

जनकस्य आतिथ्यम्—

वित्तं समस्तं जनकः प्रमोदात्
दत्वोपचारं कृतवान् यदत्र ।
जनेषु रामे च समानभावात्
चक्रे सदाऽसौ, किमितोऽन्यदस्ति ॥ 22

## 20

### सीतालङ्करणपटल.

(கோலங்காண் படலம்)

सीतामानेतुं वसिष्ठादेशः—

सजीवचित्रप्रतिमाङ्गनाभिः
रघूद्वहे शक्रवदेक्षमाणे ।
दृष्ट्वा वसिष्ठो जनकं बभाषे
"सीतां मृगाक्षीं त्वमिहानये"ति ॥ 1

